यद्वेदा दिव्यगायत्री जयति । तदेषाऽभ्युक्ता । तदेव भूतं तदु-
ाव्यम् । तत् पूर्णसौन्दर्यं लक्ष्म्याः । तदेवममृतं सदानन्दं सत्यम् ।
यम् । सर्वं तत् सकृदुच्चारणो (सकृदुच्चारः संसारमोचनो ?) भवति ।
ारायणचरणौ शरणं प्रपद्ये । इदं पूर्णमदः पूर्णं पूर्णात् पूर्णमुदच्यते ।
। पूर्णमादाय पूर्णमेवावशिष्यते । सर्वं पूर्णमिति । स होवाच—
' नारायणाय नमः ॥

---

सिद्धिज्ञप्तये । सत्यं परं ब्रह्म । श्रद्धां लक्ष्मीम् । विश्वासमुख्यत्वं वा श्रद्धामित्युच्यते । त्यमिति सर्वशङ्कातङ्कोन्मूलनमित्यादि भाव्यम् । अत्रत्यं सत्यं तद्द्वयम् सकृदुच्चारः मोचनं भवतीति वाक्यं सारप्रकाशिकायामुपात्तम् । सारास्वादिन्यां यदुक्तम्, 'पूर्व-ठित्वा पूर्णमद इत्यादिपाठानन्तरं उत्तरखण्डस्यापि पाठः कृत' इति, तदप्यत्रैव मातृकायां । इदं मनसिकृत्यैवाचार्यैः, मन्त्रोऽयं विभज्याधीतः संमेल्यानुसंधेयत्वेन विहितश्चे-ते चावसीयते । अतो मातृकेयमादरणीया लक्ष्यते । किं पूर्वदर्शितो भागः अयञ्चेति ्वोपनिषत् ? किं वा अग्निरहस्ये बृहदारण्यके चैकस्यामेव शाखायां शाण्डिल्यविद्यायाः तपाठ इव कठशाखायामेव स्थले विभिन्ने पृथगनयोः पाठः इत्यादिविमर्शो विमर्शकानां नुरुध्य यथातथा भवतु । स्थितं तु प्रकाश्यते । एकस्यामुपनिषदि श्रूयमाणं वाक्य-न्तरेऽपि तत्रतत्र पठ्यमानं बहुशो दृष्टम् । तथेहापि श्रुतानि वाक्यानि उपनिषदन्त-सन्ति । तथाहि — अत्र स वा एष महानज आत्मेति वाक्यं बृहदारण्यके श्रुतप्रायम् । यो ब्रह्माणमिति श्वेताश्वतरीये । सर्वं तदित्यादिना संमिलितोच्चारणं । पूर्वखण्डपाठः श्रीमन्नारायणेति । अस्य खण्डस्योत्तरखण्डमेलनेन पूर्णत्वसंपादनार्थो-इदं पूर्णमित्यादिः। बृहदारण्यके (७.१) पूर्णमद इत्यादिरयं मन्त्रः पठ्यते । श्रीमते रखण्डः । बृहदारण्यक एव पूर्णमद इत्येतत्पाठानन्तरम्, "ओं खं ब्रह्म । खं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्राह्मणा विदुः वेदैनेन यद् ्" इत्यानुपूर्वी लक्ष्यते । किं सैवेह लेखकप्रमादात् खंब्रह्मेत्यादिना किञ्चिदन्यथाभूता, ार्थरीतिरियमिति विवेचकविमृश्यम् । नूनमिदं सर्वम्, द्वयस्यापि प्रणवः पूर्वमपेक्षितः र्णपुरुषविषये इति ज्ञापनार्थं प्रवृत्तमिति बृहदारण्यकानुसारेण भावनीयम् । एतन्मन्त्रार्थश्च येषु विशदमनुसंधेयः । अत्र श्रीशब्दार्थनिर्वचने अन्यत्र स्थितोऽस्मदीयोऽयं श्लोको नमर्हति ; य एषः—

श्रीस्त्वं श्रिता शरणमीप्सुभिरार्तरावं
भुत्वा श्रिता सपदि शार्ङ्गिभुजान्तरालम् ।

खं ब्रह्म । खं वायुः । खं पुराणम् खमितिहासः । खं पुत्रः । वेदोऽयं ब्रह्मणो विदुः । वेदायेन वेदितव्यमिति । य इत्युपनिषत् । हरिः ओं ॥ श्रीरस्तु । शुभमस्तु ।



तं श्रावयस्यथ शृणासि समस्तमेनः
श्रीणासि च प्रगुणदास्यविधादिभिर्नः ॥ इति ।

तत् सिद्धं सर्वोपनिषत्प्रतिपाद्यः परब्रह्मभूतः पुरुषोत्तमः श्रीमन्नारायण एव भक्त्या प्रसाद्यमानः सर्वमपि पुरुषार्थं प्रयच्छतीति सर्वं समञ्जसम् ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीवीरराघवार्येण महोपनिषदस्तथा ॥
नारायणोपनिषद पुंसूक्तव्याकृतेरपि ।
द्वयोपनिषदश्चैवं परिष्कारः क्रमात् कृतः ॥
स जयति यतिराजः सोऽपि वेदान्तसूरिः
तदुभयपदसेवास्वादधन्याश्च सन्तः ।
तदनघवचनैकव्यक्ततत्त्वार्थं सर्व-
श्रुतिगणसमधीत्या साधु सर्वे जयन्तु ॥
श्रीमद्वेदवतंसलक्ष्मणमुनिश्रीपादसेवी श्रुतीः
श्रुत्वा श्रीयुतरङ्गलक्ष्मणमुनिश्रेष्ठान्महिष्ठोक्तिभिः ।
वात्स्यः श्रीशहयास्यवीक्षणपदं विख्यातनानाकृतिः
विश्वक्षेमपरो व्यधादिति परिष्कारः परो गृह्यताम् ॥
ईशाद्या याः श्रुतय उदिताः श्रीमहारण्यकान्ताः
याश्च श्वेताश्वतरमुखगाः श्रीद्वयान्ता दशान्याः ।
एताः प्राच्यप्रवरविहितव्याक्रियायुक्त्ययुक्ति-
प्राप्तद्वैधाः समुचितपरिष्कारभव्या जयन्ति ॥

इति श्रीवत्सवंशमुक्ताफलायमान सच्चकवर्ति श्रीचक्रवर्त्यार्यतनूद्भवस्य श्रीमद्वेदान्तरामानुजसंयमीन्द्रपदारविन्दमधुव्रतस्य श्रीमद्रङ्गरामानुज-संयमीन्द्रचरणारविन्दसेवासंप्राप्तसकलवेदान्तार्थस्य तर्कार्णवादिबिरदभाजः वीरराघवाचार्यस्य

**कृतिषु उपनिषद्भाष्यपरिष्कारः ।**

**शुभमस्तु ॥**

श्रीः

# महोपनिषदादिचतुष्टयार्थसंग्रहकारिकाः



नारायणस्य पारम्यं ब्रह्मेशाद्युद्भवस्ततः ।
अन्तर्यामितथैक्यञ्च **महोपनिषदीरितम्** ॥ १ ॥

ऋग् यजुः साम चाथर्ववेद इत्येदंशभाक् ।
**नारायणोपनिषद**प्याह नारायणं परम् ॥ २ ॥

ब्रह्मरुद्रेन्द्रमुख्यानां ततो जन्म तदात्मताम् ।
श्रीमदष्टाक्षरमनुं प्रणवस्याक्षरादि च ॥ ३ ॥

तत्तदंशक्रमेणोक्त्वा मुक्तिहेतोरितो मनोः ।
सर्वश्रुतिजपाद्याप्यं फलञ्च बहु साऽब्रवीत् ॥ ४ ॥

प्रोक्तः **पुरुषसूक्ते** स पुरुषोऽद्भुतविग्रहः ।
प्रकृतिप्राकृतात्मा च त्रिपाद् यस्यामृतं दिवि ॥ ५ ॥

ब्रह्माणं जनयित्वा तद्यज्ञसंराधितः श्रुतीः ।
लोकान् प्राणभृतः सर्वान् चातुर्वर्ण्यादिभागिनः ॥ ६ ॥

निर्माति निखिलैरीड्यः स्थितश्च तमसः परे ।
स उपास्यः ; ततो मुक्तिः ; नान्यः पन्था इतीरितम् ॥ ७

**द्वयोपनिषदि** प्रोक्तः श्रीमान् नारायणः परः ।
सकृदुच्चारणे सर्वफलदञ्च परं द्वयम् ॥ ८ ॥

श्रीमद्वेदान्तसौमित्रिमुनिपादाब्जसेविना ।



तर्कार्णवाद्युपाख्येन नानासद्ग्रन्थकारिणा ।
निखिलोपनिषद्भाष्यपरिष्कारविधायिना ॥ १० ॥

श्रीवीरराघवार्येण वात्स्यसच्चक्रवर्तिना ।
इत्थं कृता उपनिषदर्थसंग्रहकारिकाः ॥ ११ ॥

सर्ववेदान्तवेद्यः स वेदतद्वेदिरक्षकः ।
प्रीयतां श्रीहयग्रीवः सर्वविद्याधिदैवतम् ॥ १२ ॥

**इति**
**वात्स्यसच्चक्रवर्तिनो**
**वीरराघवाचार्यस्य** कृतिषु
**उपनिदषर्थसंग्रहकारिकाग्रन्थः**
**संपूर्णः ।**
**श्रीमते श्रीनिवासपरब्रह्मणे नमः ।**
**श्रीरस्तु ॥ शुभमस्तु ॥**

